## अथ चतुश्चत्वारिंशोऽध्यायः

—: ❀ :—

## स्वामिपुष्करिणीं प्रति माघत्रिकोटितीर्थागमनकालनिर्णयः

व्यासः—

श्रुत्वैतदथ माहात्म्यं स्वामिपुष्करिणीं प्रति ।
जनकस्तु शतानन्दं पप्रच्छेदं मुदाऽन्वितः ॥ १

जनक :—

'लोकेषु सर्वतीर्थानि कथमायान्ति तज्जले ।
किमर्थं वा तदेतन्मे कथयस्व महामुने!' ॥ २

शतानन्द —

पुरा भागीरथीतीरे मार्कण्डेयो महामुनिः ।
तपः परममास्थाय स तेपे परमं तपः ॥ ३
ध्यायन् विश्वस्य जगतः स्रष्टारं भुवनेश्वरम् ।
ततः कालेन महता ब्रह्मा लोकपितामहः ॥ ४
सान्निध्यमकरोत्प्रीत्या मार्कण्डेयस्य धीमतः ।
वचनं व्याजहारेदं मार्कण्डेयं पितामहः ॥ ५
'वरं वरय दास्यामि यमिच्छसि महामुने!' ।

मार्कण्डेयः—

'वरं देहि मम ब्रह्मन्! याचे श्रद्धासमन्वितः ॥ ६
त्रैलोक्ये यानि पुण्यानि सन्ति तीर्थानि वै प्रभो! ।
तेषु सर्वेषु तीर्थेषु यात्रायां शक्तिरस्त्विति' ॥ ७
तस्य तद्वचनं श्रुत्वा भगवांश्चतुराननः ।
प्रहसन् व्याजहारेदं मार्कण्डेयं तपस्विनम् ॥ ८

ब्रह्मोवाच— 'लोके सर्वेषु तीर्थेषु स्नानं वर्षशतैरपि ।
कर्तुं न शक्यते ब्रह्मन्! न मया न च शम्भुना ॥ ९
अन्यं वक्ष्यामि ते ब्रह्मन्! उपायं मुनिसत्तम! ।
इतो दक्षिणदिग्भागे मुने! द्विशतयोजने ॥ १०
अस्ति श्रीवेङ्कटो नाम प्रथितः पर्वतोत्तमः ।
द्रविडेषु महापुण्यः सेवितस्त्रिदशैर्गिरिः ॥ ११
तस्य शृङ्गे सुमहति पुण्या पापविनाशिनी ।
"स्वामिपुष्करिणी" नाम सरसी सर्वकामदा ॥ १२
त्रैलोक्यवर्तिनां ब्रह्मन्! तीर्थानां स्वामिनी हि सा ।
मासे तु मार्गशीर्षाख्ये द्वादश्यां पूर्वपक्षके ॥ १३
अरुणोदयवेलायां त्रिषु लोकेषु विश्रुताः ।
तिस्रः कोट्योऽर्धकोटीश्च तीर्थानां सुमहामते! ॥ १४
सान्निध्यं तत्र कुर्वन्ति स्वामिपुष्करिणीजले ।
पापं स्वेषु विनिर्मुक्तं लोकैरघसमन्वितैः ॥ १५
निर्हरन्तीह तीर्थानि तस्यास्तीर्थसमन्वयात् ।
मार्कण्डेय! महाभाग! भुवनत्रयवासिनाम् ॥ १६
तीर्थानां तत्र गत्वा त्वं सेवाफलमवाप्नुहि ।
स्वामिपुष्करिणीत्येतत् नामधेयञ्च तत्कृतम् ॥ १७
मार्कण्डेय! समस्तनां तीर्थानां स्वामिनी यतः ।
अन्यच्च तव वक्ष्यामि रहस्यं धर्मगोचरम् ॥ १८
यज्ज्ञात्वा मुनिशार्दूल! ज्ञातव्यं नावशिष्यते ।
गङ्गादिपुण्यतीर्थानि यावन्तीह महीतले ॥ १९
यानि वा मेरुशृङ्गाग्रे कैलासे मन्दरोपरि ।
पाताले सिन्धुतीरेषु तथा द्वीपान्तरेष्वपि ॥ २०

तेषु तेषु च दानानां व्रतानां जपहोमयोः ।
श्रुतिस्मृतिपुराणेषु विविधं श्रूयते फलम् ॥ २१
तत्सर्वं युगपत्प्राप्तं य इच्छेन्मुनिसत्तम! ।
समार्गशीर्षद्वादश्यां शुक्लायां नियतात्मकः ॥ २२
वेङ्कटाद्रौ महापुण्ये स्वामिपुष्करिणीतटे ।
कुर्यादेकतमं दानं विप्राय श्रुतशालिने ॥ २३
विष्णुभक्ताय शान्ताय दरिद्रायाऽनसूयवे ।
तेन सर्वेषु तीर्थेषु तद्दत्तं नात्र संशयः ॥ २४
यानि षोडश दानानि महान्त्याहुर्मुनीश्वराः ।
तेषामेकं तु यः कुर्यात् स्वामिपुष्करिणीतटे ॥ २५
मार्गशीर्षे सिते पक्षे द्वादश्यां विजितेन्द्रियः ।
तेन षोडश दानानि तीर्थेषु सकलेष्वपि ।
मार्कण्डेय! कृतानि स्युः युगपत्तत् महाद्भुतम् ॥ २६
"धनुर्मासे सिते पक्षे द्वादश्यामरुणोदये ।
आयान्ति सर्वतीर्थानि स्वामिपुष्करिणीजले" ॥ २७
इमं मंत्रं समुच्चार्य स्नातस्तत्फलमाप्नुयात् ।
एतद् गुह्यं पुरा विष्णुः प्रोवाच भगवान् मम ' ॥ २८

शतानन्दः—

इत्युक्त्वाऽन्तर्दधे ब्रह्मा मार्कण्डेयस्य पश्यतः ।
मार्कण्डेयस्तु नृपते! विस्मयाविष्टमानसः ॥ २९
नारायणगिरिं प्रायात् तथैव प्रीतमानसः ।
गत्वा तस्मिन्गिरौ पुण्ये स्वामिपुष्करिणीं शुभाम् ॥ ३०
दृष्ट्वा स्नात्वाऽथ तस्या वै विपुले विमले जले ।
तस्यास्तीरे महीपाल! भगवन्तं जनार्दनम् ॥ ३१

समभ्यर्च्य हृषीकेशं प्रसन्नेनान्तरात्मना ।
वत्सराणां त्रयं राजन्! उवास स महीधरे ॥ ३२

प्रतिवर्षञ्च तीर्थानामागमं प्रेक्ष्य तत्तिथौ ।
मार्कण्डेयो महीपाल! प्रसादात् शार्ङ्गधन्वनः ।
अवाप परमानन्दं अनन्तं शाश्वतं मुनिः ॥ ३३

वामदेवः—

'य इदं श्रावयेन्नित्यं स्वामितीर्थस्य वैभवम् ।
शृणोति परया भक्त्या द्वादश्यां मार्गशीर्षके ॥ ३४

तस्य प्रसन्नो भगवान् सर्वमिष्टं प्रयच्छति ।
एकादश्यामुपोष्यास्मिन् पर्वते वेङ्कटाह्वये ॥ ३५

द्वादश्यां मार्गशीर्षे तु पूर्वपक्षे च ये नराः ।
स्नानं कृत्वा यथान्यायं स्वामितीर्थे समागताः ॥ ३६

प्रणमन्ति जगन्नाथं तत्तीरतलवासिनम् ।
ते नरास्तत्प्रसादेन पापराशिं विधूय वै ।
तत्प्रयान्ति परं धाम शाश्वतं ब्रह्मसंज्ञितम् ॥ ३७

## स्वामिपुष्करिणीतीर्थस्नानार्थं श्रीवेङ्कटाचलं प्रति जनकनृपागमनम्

शास्त्राणां परमो वेदो देवानां परमो हरिः ।
तीर्थानां परमं तीर्थं स्वामिपुष्करिणी नृप! ॥ ३८

तस्मात्त्वमपि राजेन्द्र! गत्वा नारायणचलम् ।
स्वामिपुष्करिणीतोये स्नात्वा नियतमानसः ॥ ३९

तत्तीरवासिनं देवं शरण्यं सर्वदेहिनाम् ।
नारायणं समाराध्य सर्वान् कामानवाप्स्यसि' ॥ ४०

श्रीवेदव्यासः —

एतच्छ्रुत्वा तु जनकः शतानन्दोदितं तदा ।
प्रहर्षमतुलं लब्ध्वा मन्त्रिभिः सहितो नृपः ॥ ४१

गत्वा वृषाचलं तीर्त्रं स्वामिपुष्करिणीजले ।
स्नात्वा दृष्ट्वाऽथ देवेशं श्रीभूमिसहितं ततः ॥ ४२

तत्र स्थित्वा चिरं कालं सर्वान् कामानवाप्य च ।
आगत्य मिथिलां राजा शशास पृथिवीमिमाम् ॥ ४३

इति श्रीवामनपुराणे क्षेत्रकाण्डे श्रीवेङ्कटाचलमाहात्म्ये स्वामिपुष्करिणीं प्रति सार्धत्रिकोटितीर्थागमन - तत्कालकृतदानफलादिवर्णनं नाम चतुश्चत्वारिंशोऽध्यायः ।

---

इत्थं श्रीवामनपुराणे विंशप्रभृतिचतुश्चत्वारिंशपर्यन्तं पञ्चविंश-अध्यायात्मकः श्रीवेङ्कटाचलमाहात्म्य परोभागः समाप्तिमगमत् ।

---

श्रीवेङ्कटाद्रिनिलयः कमलाकामुकः पुमान् ।
अभङ्गुरविभूतिर्नः तरङ्गयतु मङ्गलम् ॥





इत्थं श्रीवामनपुराणे
विंशप्रभृति चतुश्चत्वा-
रिंशपर्यन्तं
पञ्चविंश अध्यायात्मकः
श्रीवेङ्कटाचल माहात्म्यपरो
भागः समाप्तिमगमत्